# तपःफलम्

(महाकवि–कालिदासविरचित–कुमारसम्भव–पञ्चमसर्गस्य
नभोवाणीरूपकम् )

प्रा. कृ. त. पाण्डुरङ्गि

# तपःफलम्

*वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वती परमेश्वरौ ॥ १ ॥

(नान्द्यन्ते)

सूत्रधारः— आज्ञप्तोऽस्मि नभोवाणीश्रोतृवर्गेण यथा महाकविना कालिदासेन काव्यरूपेणोपनिबद्धस्य उमातपःफलोदयसन्दर्भस्य नभोवाणीरूपकमाधुनिककविना पाण्डुरङ्गि कृष्णेन विरचितं प्रसारयतु भवानिति । अहो कविकुलमौलिवन्द्यता वरकवेः कालिदासस्य ।

‡दासतां कालिदासस्य कवयः के न बिभ्रति ।
इदानीमपि तस्यार्थानुपजीवन्त्यमी यतः ॥ ॥ २ ॥

भवतु ! आर्यामाहूय सङ्गीतोपक्रममादिशामि । अये पार्श्व एव तिष्ठति मे सहचरी नभोवाणीनिर्देशकाज्ञानुसारेण स्ववचनं यावन्मौनमातिष्ठन्ती । प्रिये ! महानयं क्लेशस्ते यज्जिह्वा न चालनीयेति । अथ प्रवर्ततां सङ्गीतकम् ।

---

* रघुवंश I. 1 ‡ मधुराविजय I. 7

नटी—( निश्वस्य ) आर्यमिश्र ! नेदं मौनं नभोवाणीनिर्देशकाज्ञानुसारेण द्विस्वरोत्पत्तिभयेन वा मया आस्थितम् । किन्तु दुहितुः उमायाः तपःक्लेशेन परितपन्त्या मेनाया दशां चिन्तयन्त्या मे वाणी न प्रसरति ( विलोक्य ) अये गौरीशिखरादागतया पार्वतीसख्या सह संलपन्ती मेना इत एवागच्छति । गच्छावस्तावत् ।

( निष्क्रान्ते )

( ततः प्रविशति पार्वतीसख्या अनुगम्यमाना मेना )

मेना—कथय कथय कथं मे वत्सा उपात्ततपस्विनीवेषा दृश्यत इति ।

सखी—अम्ब ! गिरीशसक्तमानसया तया हारं विमुच्य बालारुणपिङ्गलं वल्कलं धृतम् । जटाभिश्च तदीयं आननं मधुरं दृश्यते । त्रिगुणां मौञ्जीं बिभर्ति । कुशाङ्कुरादानपरिक्षताङ्गुलिः करः अक्षसूत्रप्रणयी कृतः ।

मेना—धावति मे मनो वत्साया उमाया मुखं द्रष्टुम् । कथय तावदस्या मुनिव्रतचर्य्याम् ।

सखी—अम्ब शृणु तावत् । महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि दूयमाना सा बाहुलतोपधायिनी भूत्वा स्थण्डिल एव शेते । नियमस्थया तया विलासचेष्टितं विलोलदृष्टिश्च लतासु हरिणाङ्गनासु च निक्षिप्ते । घटस्तनप्रस्रवणैः स्वयमेव वृक्षकान् वर्धयति । अरण्यबीजाञ्जलिलालिता हरिणाः तस्यां दृढं विश्वसन्ति । विरोधिसत्त्वैर्मत्सर उज्झितः । द्रुमैः अभीष्टप्रसवेण अतिथयः अर्च्यन्ते । ऋषयोऽपि तां दिदृक्षवोऽभ्युपगच्छन्ति ।

मेना—धन्या किलास्मि अनया दुहित्रा । गच्छ तावत् गौरीशिखरं पुनरपि ते सखीं परिचरितुम् ।

( निष्क्रान्ते )

( ततः प्रविशति गौरीशिखरे चतुरग्निमध्यगता सूर्यं पश्यन्ती उमा पार्श्वस्थिता सखी च )

सखी—अहो अनितरसाधारणं चेतसः स्थैर्य्यं मे सख्याः पर्वतराजपुत्र्याः । तथा हि

शुचौ चतुर्णां ज्वलतां हविर्भुजाम्
शुचिस्मिता मध्यगता सुमध्यमा ॥

विजित्य नेत्रप्रतिघातिनीं प्रभाम्
अनन्यदृष्टिस्सवितारमीक्षते ॥ ३ ॥

अयाचितोपस्थितमम्बु केवलम्
रसात्मकस्योडुपतेश्च रश्मयः ॥
भवन्ति चास्याः किल पारणाविधिः
न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥ ४ ॥

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः
वलीषु चास्यास्स्खलिता विशन्ति वै
चिरेण नाभिं प्रथमोदविन्दवः ॥ ५ ॥

मृणालिकापेलवमेवमादिभिः
व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ॥
तपः शरीरैः कठिनैरुपार्जितम् ।
तपस्विनां दूरमधः करोति सा ॥ ६ ॥

( विलोक्य ) अये परिसमाप्तसूर्योपस्थाना मे प्रियसखी । उपसर्पामि तावत् ( उपसर्पति )

उमा—हला अपि सन्नद्धपारणसम्भारासि ?

सखी—सखि अ[illegible]

स्भारचिन्तया ?

उमा– ननु पारणार्थी कोऽप्यतिथिः समागच्छेत् ।

सखी—सखि समृद्धफलमूलमिदं तपोवनम् (आकर्ण्य) अग्रे पदशब्द इव श्रूयते (विलोक्य) सखि अजिनाषाढधरः शरीरबद्धः प्रथमाश्रम इव कश्चिद-स्युपैति । दिष्ट्या चिरात् प्राप्तातिथयो वयं वर्धामहे ।

(ततः प्रविशति ब्रह्मचारी)

उमा—(उत्थाय) स्वागतं तपोधनाय (स्वगतम्) कथं दृष्टमात्र एव एतस्मिन् चेतो मे बहुमानमावहति । दृष्टिश्च रज्यति (प्रकाशम्) हला अर्घ्योपकरण-मानय (अर्घ्यमर्पयति)

ब्रह्मचारी — आर्ये

अपि क्रियार्थं सुलभं समित्कुशम्
जलान्यपि स्नानविधिक्षमाणि ते ॥
अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ॥ ७ ॥

सखी—भवादृशामनुग्रहेण निष्प्रत्यूहं सख्यास्तपः

ब्रह्मचारी— आर्ये! प्रयुक्तसत्कारविशेषं न मां परं सम्प्रतिपत्तुमर्हसि। 'सङ्गतं साप्तपदीनमि'ति मनीषिभिरुच्यते। अतो द्विजातिभावचापलादहं किञ्चित् प्रष्टुमनाः। रहस्यं न चेत् प्रतिवक्तुमर्हसि

उमा— ( सखीमुखं पश्यति )

सखी— आर्य अनतिक्रान्ततपोवनमर्यादं वाढं प्रष्टुमर्हसि।

ब्रह्मचारी— आर्ये

कुले प्रसूतिः प्रथमस्य वेधसः
त्रिलोकसौन्दर्यमिवोदितं वपुः॥
अमृग्यमैश्वर्यसुखं नवं वयः
तपःफलं स्यात् किमतः परं वद ॥८॥

सखी— आर्य! सत्यमुक्तं भवत म प्यस्ति तपसः कारणं मे सख्याः।

ब्रह्मचारी—किं नाम दुःसहमनिष्टं स्यात्? अथ पितृगृहे विमानना? आहोस्वित् पराभिमर्शः? किमिति वार्धकशोभि वल्कलं यौवने धृतमिति बहु चिन्तयन्नपि नाहं तपसो निमित्तं पश्यामि।

अथ उपयन्तारं वरं प्रार्थयसे तर्हि अलं समाधिना। 'न रत्नमन्विष्यति मृग्यते हि तत्'।

उमा—(निश्वसिति)

ब्रह्मचारी—निवेदितं किल निश्वसितेन। ईदृशस्य रूपराशेः प्रार्थयितव्य एव न दृश्यते। प्रार्थितस्सन् कथं दुर्लभो भविष्यति?

सखी—नाद्ययावत् प्रियजन्युः तपसः फलोदय इति पश्यत्येव भवान्।

ब्रह्मचारी—अस्याः प्रियः सौभाग्यमदेन वञ्चित इति मन्ये यदद्ययावदात्मनो वक्त्रमस्याः चक्षुषो लक्ष्यं न करोति। कियच्चिरं वा एषा श्राम्यति। अस्ति मे पूर्वाश्रमसञ्चितं तपः। तस्यार्धभागेन अस्याः काङ्क्षितं वर लम्भयितुमिच्छामि। कोऽयं सचेता यस्य मनः अतिमात्रकर्शितामिमां दृष्ट्वा न दूयते?

उमा—(अपवार्य) हला स्पृशति मे हृदयं वर्णिनो वचनम्। शालीनतया न वक्तुं प्रभवामि। त्वमेव तावत् भण।

सखी — आर्य ! महेन्द्रप्रभृतीन् चतुर्दिगीशानवमत्य सखी मे पिनाकपाणिं पतिमिच्छति ।

ब्रह्मचारी — अलं परिहासेन । इङ्गितं पृच्छामि ।

उमा — इङ्गितज्ञा मे सखी । तप इदं चन्द्रशेखरावाप्तिसाधनम् । न खलु मनोरथानामगतिर्नाम ।

सखी — पुरा किल पुरारिणा असह्यहुङ्कारेण निवर्तितः पुष्पधन्वनः शिलीमुखः इमां हृद्यक्षिणोत् । तदाप्रभृति उन्मदना एषा तुषारसंघातशिलातलेष्वपि निर्वृतिं न लभते स्म । त्रिभागशेषासु निशासु नेत्रे निमील्य 'नीलकण्ठ क्व व्रजसी' ति असत्यकण्ठार्पितबाहुबन्धना व्यबुध्यत । स्वहस्तोल्लिखितः शशिमौलिः 'सर्वगतस्त्वं भावस्थमिमं जनं कथं न वेत्सि' इति रहसि अनया उपालभ्यत । जगत्पतेस्तस्याधिगमेऽन्यमुपायमलभन्ती तपसे तपोवनमिदं प्रपन्ना । किन्तु अस्या मनोरथो नाद्ययावत् प्ररोहाभिमुखः । न जाने कदा वा सः तपःकृशां मे सखीमभ्युपपत्स्यत इति ।

ब्रह्मचारी — आर्ये ! विदितो मे महेश्वरः ।

अमङ्गलाभ्यासरतेस्तस्यानुवृत्तिं नाहमनुमन्तुमुत्सहे । अहिकङ्कणेन शम्भोः करेण कथं वा ते धृतविवाह-कौतुकस्य करस्यावलम्बनं सहिष्यते । कथं वा कलहंसलक्षणं वधूदुकूलं शोणितबिन्दुवर्षि गजा-जिनञ्च योगमर्हतः । अलक्तकाङ्कानि ते पदानि परेत-भूमिषु को वा अनुमन्येत । हरिचन्दनास्पदे ते स्तन-द्वये चिताभस्म पदं करिष्यतीत्यतः परं किं नाम अनौचित्यमावहेत् । परिणीतया त्वया करीन्द्रारोह-योग्यया वृद्धोक्षमधिष्ठितं दृष्ट्वा पुरजनः स्मेर-मुखो भविष्यति किल । किं बहुना

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु
वरेषु यद् बालमृगाक्षि मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ९ ॥

अलं श्मशानशूलस्य यूपसत्क्रियाकरणेन

उमा— आर्य ! न भवान् परमार्थतो महेश्वरं वेद । यदेवं महात्मनस्तस्य चरितं द्वेष्टि ।

अकिञ्चनःसन् प्रभवः स सम्पदाम्
त्रिलोकनाथःपितृसद्मगोचरः ॥

स भीमरूपः शिवइत्युदीर्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥ १० ॥

अथवा अलं विवादेन। मम पुनर्भावैकरसमत्रमनः। सखि निवार्यतामेष बटुर्यो महतोऽपभाषते । अथवा अहमेव इतो गमिष्यामि ( गन्तुमिच्छति )

ब्रह्मचारी —( स्वरूपमास्थाय ) प्रिये पर्वतराजपुत्रि उदितं ते तपःफलेन ( इति समालम्बते )

सखी —अये कथं ! नीलकण्ठ एष नैष्ठिकसुन्दरः। दिष्ट्या सम्पूर्णो मे सख्या मनोरथः । हन्त रमणीया इयं दशा लज्जापिताया मे सख्याः । तथाहि

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः
निक्षेपणाय पदमुद्धृतमुद्वहन्ती ॥
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ११ ॥

ब्रह्मचारी— ( पार्वतीं समालम्ब्य )

अद्य प्रभृत्यवनताङ्गि तवास्मि दासः ।
क्रीतस्तपोभिरयि पार्वति चन्द्रमौलिः ॥

सद्यःक्लमं नियमजं जहि कोमलाङ्गि ।
क्लेशः फलेन हि पुनर्नवतां विधत्ताम् ॥ १२ ॥

प्रिये किं ते भूयः प्रियमुपकरोमि ।
उमा—किमतःपरं प्रियमस्ति ।

*या मे प्रीतिर्विरूपाक्ष त्वदनुध्यानसम्भवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम्
॥ १३ ॥

तथापीदमस्तु

‡शिवमस्तु सर्वजगतां परहितनिरता
भवन्तु भूतगणाः ॥
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः ॥

( निष्क्रान्तास्सर्वे )

इति श्रीमहाकविकालिदासविरचितकुमारसम्भवपञ्चमसर्गस्य नभोवाणीरूपकपरिवर्तनं पाण्डुरङ्गिकृष्णेन विन्यस्तं समाप्तम् ॥

---

* कुमारसम्भव VI. 21 ‡ मालतीमाधव X. 25